*Advaita Grantha Ratna Manjusha Ratna-22—*



**Shri Sureshvaracharya's**

Brihadaranyakopanishad-

# SAMBANDHABHASHYAVARTIKAM

With the Commentary

## SHASTRAPRAKASHIKA

of

**Shri Aanandagiri Aacharya**

*Adorned with*

The Sambandhabhashya text with

**Nyayanirnaya**

SHRI AANANDAGIRI'S COMMENTARY

*thereon*

Edited With introduction notes, etc.

*by*

Panditaraja Shastraratnakara etc.

Shri S. Subrahmanya Shastri M. A

*Director*

Mahesh Research Institute of Indian Philosophy

Under directions from

**Shri Swami Maheshanandagiri Maharaj**

Mahamandaleshvar Pontiff of Dakshinamurti Peetha

**Mahesh Research Institute**

*Mount Abu* *Varanasi*

अद्वैतग्रन्थरत्नमञ्जूषायाः २२ रत्नम्—




सटीकसम्बन्धभाष्येण सह

*श्रीमच्छङ्करभगवत्पादाचार्यशिष्य-पदवाक्यप्रमाणपारावारपारीण-*

**श्रीमत्सुरेश्वराचार्य-**

विरचितं

**काण्वशाखीयबृहदारण्यकोपनिषदः**

# सम्बन्धभाष्यवार्तिकम्

*सर्वतन्त्रस्वतन्त्र-*

श्रीमदानन्दगिर्याचार्य-

रचित-

**शास्त्रप्रकाशिका-**

टीकासमलङ्कृतं

*श्रीदक्षिणामूर्तिपीठाधीश्वराचार्यमहामण्डलेश्वर-*

**श्रीमन्महेशानन्दगिरिमहाराजानां**

निदेशेन

*पण्डितराजशास्त्ररत्नाकरादिपदभाजा*

**श्री एस. सुब्रह्मण्यशास्त्रिणा**

*महेश-अनुसन्धान-संस्थान-निदेशकेन*

संशोध्य पाठभेदटिप्पण्यादिभिः

सम्पादितम्

**महेश-अनुसन्धान-संस्थानम्**

माउन्ट आबू वाराणसी

*Published by*

**Mahesh Research Institute**
**Shri Shankar Kul**
Mount Abu-307 501 ( India )
Phone : 146

**Mahesh Research Institute**
**Shri Dakshina Murti Matha**
D. 49/9 Mishra Pokhara
VĀRANASI-221 001 ( India )

Copies and information may be had of—

**Mahesh Research Institute**
**Shri Dakshina Murti Matha**
D. 49/9 Mishra PoKhara
VARANASI-221 001 ( India )

भगवत्पादाब्दः ११९२
वैक्रमाब्दः २०३७
खैष्टाब्दः १९८०



*first Impression*

Rs. 50/-

***Printed by***
Aanand Kanan Press
CK.36/20 Dhundhiraj
**VARANASI-221 001**

## निर्देशिका

श्रीदक्षिणामूर्तिविजयतेतमाम्

श्रीमत्परमहंसपरिव्राजकाचार्यं-पदवाक्यप्रमाणपारावारपारीण-शमदमोपरतितितिक्षासमाधानश्रद्धाचरणनिष्ठ-
ब्रह्मविद्वरिष्ठ-यतिचक्रवर्तित्वाद्यनाद्यनवच्छिन्नगुरुपरम्पराप्राप्तब्रह्मात्मैक्यज्ञानवैभवानुभवप्रद्योतितान्तः-
करण-वेदान्तमार्गप्रवर्तक-श्रीकाशीक्षेत्रस्थितश्रीकेवलाद्वैतव्याख्यानसिंहासन-दक्षिणामूर्तिपीठाधीश्वर-
शङ्करधर्मस्थापनाचार्यं-श्रीशङ्करभगवत्पादारविन्दोपासक-तोटकाचार्यानन्दगिरि-परम्पराप्राप्त-
महामण्डलेश्वरस्थानवैभव-सर्वतन्त्रस्वतन्त्र-अनन्तश्रीविभूषित-नृसिंहगिरिस्वामि-करकमल-
सञ्जात-श्रीदक्षिणामूर्तिनिरञ्जनपीठाचार्यं-**महेशानन्दगिरि**महामण्डलेश्वरस्वामिभिः

**क्रियन्ते नारायणस्मृतयः**

वेदान्तग्रन्थमञ्जूषायाः द्वाविंशं रत्नं प्रकाश्यत इति ज्ञात्वा हर्षिता वयम् । घोरेऽस्मिन् कलौ श्रीशङ्करभगवत्पूज्यपादप्रदर्शितं मार्गं विहाय नान्यमुपायं शान्तिकरमुत्पश्यामः । मुमुक्षूणां कृते तु पूर्वमपि नासीद्ब्रह्मज्ञानादृते किमप्युपायान्तरम् । वैदिककर्मणा तु आपेक्षिकी शान्तिरासीदपि । अधुना तु द्रव्यादेरनुपलभ्यता, वर्णाश्रमादिसाङ्कर्यादधिकारिणोऽप्यनुपलभ्यता जरीजागर्ति । तस्माद्भाष्यकारप्रदर्शितं विधुराधिकरणमनुसृत्य पुरुषमात्रसम्बन्धिभिर्जपोपवासदेवताराधनादिभिरन्तःकरणस्यापि संशुद्धिः सम्भवति । तदनुकूलस्तोत्रदेवमन्दिरादीनामपि सौलभ्यं कृतं शङ्करभगवत्पूज्यपादैः, तदनुसारिभिश्च दशनामसम्प्रदायाचार्यैस्तत्र तत्र तदा तदा । एवं बहिरङ्गं संसाध्य निर्गतनिखिलकल्मषान्तःकरणैस्तु बाह्याभ्यन्तरिकालिङ्गसलिङ्गपारिव्राज्यं गृहीत्वा सभाष्यं सवार्तिकं प्रस्थानत्रयं श्रोतव्यम् । संशयविप्रतिपत्तिनिवारणाय प्रकरणग्रन्थानां लघुचन्द्रिकापर्यन्तानां विचारणं विधेयम् । कृते चित्तैकाग्र्येण श्रवणे-मनने पर्याप्ते ब्रह्मवेदने । प्रारब्धदोषतो नानुभूयते जीवन्मुक्तिश्चेज्जीवन्मुक्तिमिच्छता प्रबलदोषनिवृत्त्यै संयमाभ्यासादिकमेकान्तसेवनादिकं च कार्यम् । अल्पदोषनिवृत्त्यै तु वेदान्तपाठनं शिष्यबोधायेति । तत्र च शिष्यसन्देहनिवृत्तियत्नजनितेनापूर्वेण जीवन्मुक्तेर्लाभो भविता । अयमेव राजमार्गः श्रेयस्करः शान्तिप्राप्त्यै ।

किन्तु ग्रन्थानामभावे कथं पठनं पाठनं सिद्ध्येदिति भृशं चिन्तयन्तः खिन्ना वयं भगवन्तं भूतभावनं शङ्करं प्रार्थितवन्तः । भिक्षुभिरस्माभिर्द्रव्यानर्हैर्न तादृशी चिन्ता कार्येति श्रीदक्षिणामूर्तिना **विष्णुदासमेहताख्यः** कश्चिच्छ्रेष्ठिप्रवरः प्रेरितः । तन्मुखात् सर्वप्रकाशनं स्वकीयद्रव्येण करिष्यामीति प्रतिज्ञां श्रुत्वा निश्चिन्ता अभूम । पारिव्राज्यधर्ममनुसरद्भिर्नैकत्र स्थातव्यमस्माभिः । सम्पादनं तु नैवं भवेदिति कृत्वा पण्डितराजादिविरुदान्विता एकविंशतिविक्रमशताब्दे वेदान्तज्ञाने मार्तण्डवदुद्भासिताः शास्त्रिप्रवराः **श्रीसुब्रह्मण्यशास्त्रिणो**ऽस्य सम्पादने संयोजिताः । अल्पीयसैव कालेन महता श्रमेण सत्यपि वार्धक्ये श्रीशङ्करानुरागमात्रेण कृतसङ्कल्पा द्वाविंशं रत्नं प्रकटयन्तीति प्रमोदान्वितास्सञ्जाता वयमपि । प्रार्थये शङ्करं यच्छास्त्रिसुब्रह्मण्यमहोदयाः जीवन्मुक्तिसुखं सम्प्राप्नुयुरिति ।

विशेषोऽयमस्मिन् ग्रन्थरत्ने—सर्वतन्त्रस्वतन्त्राणां भगवत्पादशिष्येषु प्रधानानां श्रीमत्सुरेश्वराचार्याणां कृतिषूत्तमस्य वेदान्तेषु सारतमस्य सकलवेदार्थानां न्यायपूर्वकनिर्धारणात्मकस्य वार्तिकामृतमित्यन्वर्थनामधेयस्य श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकस्य कर्मकाण्डवेदान्तसम्बन्धप्रतिपादकभाष्यविवरणरूपोंऽशोऽत्र सम्बन्धभाष्यवार्तिकशीर्षकेण सटीकसम्बन्धभाष्येण साकं प्रकाश्यत इति । अस्य ग्रन्थस्य गाम्भीर्यं पूर्वपुण्यपुञ्जेनैव लभ्यत्वं च

> सम्बन्धवार्तिकमहाम्बुधिरेष तीर्णः सत्सम्प्रदायपदवीकृतसेतुबन्धः ।
> सत्तर्कमानलहरीगहनावगाहपूर्णेन पुण्यनिचयेन पुराकृतेन ॥

इति श्रीमद्भिरानन्दगिरिभिरेव समसूचि । अयं ग्रन्थो न केवलं बृहदारण्यकस्योपोद्घातोऽपितु समेषां वेदान्तानाम् । इत्यतो वेदान्ते श्रद्धालवः समेऽपीमं सटीकवार्तिकामृतमास्वाद्य "अत्र ब्रह्म समश्नुत" इति प्रकृतोपनिषत्सूचितरीत्या जीवन्त एवामृता भवेयुरित्याशास्महे ।

एषां समेषां ग्रन्थानां आङ्गलहिन्दीभाषानुवादोऽपि प्रकाशयिष्यते सत्वरमेव । तेनासंस्कृतज्ञा अपि श्रवणमननादिसिद्धिं कृत्वा प्राप्स्यन्ति शान्तिं ज्ञानं च ।

ग्रन्थप्रकाशने **शारदानन्दशास्त्रि**महोदया अस्मदन्तेवासिनो बहुश्रमं कृतवन्तः । तत्सर्वं "भक्तिं मयि परां कृत्वा मामेवैष्यती"ति शास्त्रेण ब्रह्मानुभूतेरुपायत्वेन तैरनुष्ठितोऽपि पाठकानधमर्णीकरोति ।

उमारमणं रमारमणं च प्रार्थये यत्समेषां बुद्धौ स्फुरतु ब्रह्मात्मैक्यम् । येषां गृहे च शाङ्करवचनरूपा ग्रन्थाः स्थिता मन्ये तेषां गृहाद्भूतग्रहपिशाचगदाकालमृत्युशान्त्यभावादीनि च निर्गच्छेयुरिति ।

वैक्रमाब्दे सप्तत्रिंशदुत्तरद्विसहस्रतमे श्रीशङ्कराविर्भावपर्वणि । —नारायणस्मृतयः

# PREFACE

The Mahesh Research Institute of Indian Philosophy now lays before the public the first part Brihadaranyaka Bhasya otherwise called Sambandhadhasya, along with the Sambandha-Vartika of Shri Sureshvaracarya, a masterly exposition by a direct disciple there on, which is further beautifully commentated upon by Shri Anandgiri Acarya.

It is said in the Shankaravijayas that when Shri Bhagavatpada desired his great and elderly disciple Shri Sureshwaracarya to write a Vartika on his Brahmasutra Bhasya, other disciples objected to it. They felt that Sureshvara was a confirmed ritualist and was converted to the Advaitia religion and philosophy by compulsion. Thus he could not faithfully interprete the magnum opus He was not fit for the task. and could even do harm to the true faith by making it subservient to the retualism of Mimamsa. This objection was refuted strongly by Sureshvara by writing the Naishkarmya-Siddhi, which was applauded by the great master and other disciples alike. This fact is reveled to us by him in the opening verse :

न ख्यातिलाभपूजार्थं ग्रन्थोऽस्माभिरुदीर्यते ।
स्वबोधपरिशुद्ध्यर्थं ब्रह्मविन्निकषाश्मसु ॥

Shri Bhagavatpada did not want to do what was objected to once. thus showing a great love for his disciples, directed Sureshvara to write vartikas on Bhasyas of Taittiriya Upanishad, belonging to this Shakha, and Brihadaranyaka-Upanishad which belonged to Sureshvara's Shakha. Incidentlaly apart from Mandukya these are the to most exhaustive and philosophical Upanishad-Bhashyas of the master.

These Vartikas prove him to be the greatest exponent of Shri Shankaras works and philosophy, and equally the most vehement opponet of the ritualist philosophy of Mimamsa.

This is easily discernable in the pages of Sambandha-Vartika, now issued. The concept of Bhavana developed by the Bhatta School, as well as the concept of Niyoga followed by Prabhakara school, are torn thread bare in this work. The concept of Ishtasadhanatva as the real purport of lin i.e. command is established with marvellous and penetrating reasoning.

Shri Shankara in his introduction to the Brihadaranyaka-Upanishad enunciates that the man wants his desires fulfilled. He also wants to get rid of the undesirable. In temporal matters he learns by ordinary direct experiences what are the means to the desired end and means to avoid undesired ends. But in non-temporal ends and means the vedas are the only guide and the refuge. The Vedas teach us the existence of an Atman apart from the body, and also instruct us the means to attain non-temporal desired ends and avoid undesired ones. But the ritualistic portion, ( Karmakanda ) preceding the upanisad, does not teach the knowledge of Brahman. This knowledge is the only means to remove the ignorance, which leads to likes and dislikes. These in themselves are the human misery. The upanishads teach Brahman as the true self and thus maks the aspirant Brahman itself. Before attaining this knowledge, man commits all sorts of good and evil deeds, and as the result there of, goes to heaven, hele and earth again and again. At last due to good deeds performed in some particular life he becomes averse to this cyclic movement. Brahman knowledge should be imparted to such an aspirant, and upanishads fulfil this aim.

This Bhashya is exhaustively commented upon by Shri Sureshvara by refuting the various views of the ritualists, who recommend the performance of vedic karmas as the means to Moksha. He refutes the views of both the great ritualists; Kumarila and Prabhakara. The ritualists maintain that the upanishad form a part of Vedic ritualism, hence they only extol the deities of the sacrifices. Thus upanishads are only auxillary to these sacrificial rituals. If it be insisted that the rules enunciated by ritualists themselves contradict their auxillariness they could be looked upon as a separate and independent section enjoining the mental ritualism viz. Upasana for Moksha. Thus all the various parts of Vedas have only one purpose in end the Karmas, physical or mental. Afier successfully refuting all objections Sureshvara concludes that the knowledge of Brahman is the sole means of liberation. He further proves that the absolute Brahman is the sole purport of the Upanishads.

The Mahesh Research Institute of Indian philosophy now issues the 22nd gem of the Advaita Granth Ratna Manjusa series, and proposes to issue shortly the Bhasyas of Chandogya and Brihadaranyaka-Upanishads along with the annotations of Anand Giri in the compact volume. They rest of the vartika alongwith the Shastra-prakashika of Anand Giri will be published in one or two volumes. The editor has given exhanstive notes on difficult portions and has also refuted the arguments of the Vaishnavas. He has also enlightened the readers on difficult portions of ritualistic mimamsa. Shri Swami Maheshanand Giri Mahamandaleshvar the pontiff of Shri Dakshinamurti Peetha is the chief architect of the series. All lovers of Vedanta are indebted to him for his keen desire and activities for the preservation of Vedanta, both by teaching and re-editing Vedanta works of importance.

*Shri Sharadananda Shastri* and *Shri Vamsapati Dwivedi Shastri* are to be highly congratulated for helping us to edit and also getting the book printed without delay.

*S. Subrahmanyam Shastri*
*Director*
*Mahesh Research Institute*

## उपोद्घातः

इदानीं महेशानुसन्धानसंस्थानेन प्रकाश्यमानाद्वैग्रन्थरत्नमञ्जूषान्तर्गतं सटीकसुरेश्वराचार्यवार्तिकसमेतं बृहदारण्यकोपनिषदः सम्बन्धभाष्यात्मकं द्वाविंशतितमं रत्नं प्रकाश्यते। सुरेश्वराचार्या हि भगवत्पादैरेव बृहदारण्यकतैत्तिरीयकोपनिषद्भाष्ययोः स्वोपज्ञयोर्वार्तिकं रचनीयमित्याज्ञप्ताः तथैव ग्रन्थरत्नं वितेनुः। "उक्तानुक्तदुरुक्तादिचिन्ता यत्र प्रवर्तते। तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः" इति वार्तिकलक्षणं मूलगतदुरुक्तचिन्तनमपि अन्तर्भावयति स्वग्रन्थे। व्याकरणवार्तिके मीमांसावार्तिके चेदं सम्यक् समन्वेति च। तथापि भगवत्पादीयभाष्ये न केनापि कोऽपि दोषः प्रदर्शयितुं शक्यते? अत एव टीकाकृद्भिः आनन्दगिर्याचार्यैः "उक्तानुक्तद्विरुक्तादो"ति श्लोकः समाश्रितः। तथापि दुरुक्तत्वेन भासमानानां भाष्यवचनानां नेमानि दुरुक्तानि अपितु शास्त्रीयाणीति समर्थने तात्पर्यम्।

न्यायकल्पलतिकाटीकाकृतो विद्यासागरास्तु यत्र वार्तिककारा भाष्यमाक्षिपन्ति तत्र "वार्तिकलक्षणसिध्यर्थमाक्षिपति" इत्यवारयन्तः वार्तिककाराणां भाष्ये श्रद्धामेव प्रदर्शयन्ति ( बृ० वा० १.२.१४६ )।

अत्र सकलाद्वैतशास्त्रोपयोगिनोऽर्था एव विशेषतो विचारिताः तथाहि—

१. गृहस्थः शरीराद्यभिमानवान् अहमस्य कर्मणः कर्ता तत्फलस्य च भोक्तेति निश्चितबुद्धिः कर्माधिकारी। मुमुक्षुः त्यक्ताशेषकर्मा कर्तृत्वादिकमात्मनः नास्तीति शास्त्रान्निश्चितबुद्धिः ज्ञानेऽधिकारीति विशेषः इत्यधिकारिभेदः शास्त्रस्य।

२. नित्यकर्मानुष्ठानस्यापि स्वर्गादिफलजनकत्वमस्तीत्युपगमात् न नित्यानां मोक्षफलम्।

३. एकस्मिन्नेव जन्मनि निषिद्धकाम्ययोस्त्यागात् विहितानुष्ठानात् प्रारब्धकर्मणां भोगेन क्षयात् सञ्चितानां नित्यानुष्ठानक्लेशादेव क्षये एकस्मिन्नेव मुक्तिः प्राप्तुं शक्येति पक्षस्य विस्तरेण दूषणम्।

४. आत्मज्ञानमपि कर्माङ्गमिति पक्षस्य निरासः, आत्मनः अकर्तृत्वाभोक्तृत्वादिगुणवतः कर्मविरुद्धत्वात्। आत्मज्ञानस्य कर्मानङ्गत्वेऽपि कर्तृत्वादिस्वाभाविकधर्मेषु निश्चयवन्तमादाय शास्त्रप्रामाण्योपपत्तिः।

५. कैवल्यं ज्ञानैकसाध्यं तत्र क्रियाणां निष्कामेन क्रियमाणानां विविदिषायामुपयोगः। 'तरति शोकमात्मवित्' इति ब्राह्मणम्।

६. ज्ञानकर्मसमुच्चयस्त्वसंभावितः तत्त्वज्ञानिनोऽसङ्गाद्वितीयत्वनिश्चयात्।

७. सर्वस्यापि वेदस्य "आम्नायस्य क्रियार्थत्वादि"त्युक्तेः कर्मपरत्वमिति शङ्कानिरासः।

८. प्राभाकराभिमतस्य 'नियोगः विध्यर्थ'इति पक्षस्य नियोगस्वरूपखण्डनेन तस्य विध्यर्थत्वखण्डनेन च निराकरणम्।

९. भावनाया वाक्यार्थत्वनिरासः लिङ्गः इष्टसाधनत्वार्थकत्वस्य समर्थनं च।

१०. सिद्धं ब्रह्म मानान्तरवेद्यमिति पक्षनिरासः।

११. तत्त्वज्ञानोत्तरं मानसं तत्त्वज्ञानावृत्तिरूपं प्रसङ्ख्यानं मोक्षसाधनमिति पक्षस्य ब्रह्मसिद्धिकाराद्दतस्य खण्डनम्।

१२. प्रसंख्यानविधिपक्षे वेदान्तानां नियोगानिष्ठत्वं अद्वयब्रह्मासिद्धिप्रसङ्गश्च।

१३. चतुष्पात्प्रमाणं—शब्दः, युक्तिः, प्रमाणं, आत्मा चेति पादाः—इतिपक्षनिरासः।

१४. शास्त्रस्य युक्त्यनपेक्षता।

१५. नियोगो वा भावना वा न लिङर्थः अपितु इष्टसाधनत्वमेव तथेति सिद्धान्तः।

१६. वाक्येनैव ब्रह्मानुभवः साध्यः।

१७. भेदस्य प्रत्यक्षानुमानादिना न साधयितुं शक्यता।

१८. यथार्थानुभवे सर्वत्र ब्रह्मण एवाज्ञातस्य विषयता।

१९. सुखस्वरूपविचारः—सुखं न दुःखनिवृत्तिः अपि तु भावरूप आत्मैव सुखम् ।

२०. ज्ञानमेवाज्ञाननिवर्तकं ब्रह्मस्वरूपं तु स्वप्रकाशत्वात् स्वयमेवानन्दरूपतया प्रकाशते मुक्तस्येति च ।

इत्थमतिगम्भीरविषयनिबन्धनस्य दुरूहस्य वार्तिकस्य आनन्दगिर्याचार्योपज्ञा टीकाऽत्र न्यवेशि । मुद्रितपूर्वापीयं टीका नेदानीमुपलभ्यते । आनन्दगिरीणां व्याख्यानरीतिः सुप्रसिद्धा सरला मूलार्थविबोधनाय पण्डितैः समादृता च । स्वपक्षस्थापनाय वार्तिकोद्धृतानां मीमांसाधिकरणानां प्राभाकरपक्षानुसारित्वात् दुरवगाहतामालक्ष्य श्रीमदानन्दगिरिभिः अतिविशदया शैल्या तेषामुपपादनं सर्वान् विदुषः अधमर्णयति । आनन्दपूर्णविद्यासागरटीकाप्यन्यत्र मुद्र्यमाणा वर्तते । सा तु संक्षिप्ता सरला च । टीकयोः व्याख्याप्रकारः प्रायः सुसदृश एव । यत्र तु क्वचिद्भेदो विद्यासागरीये उपलभ्यते तत्र तत्र सोप्यत्र टिप्पण्यामुद्धृत्य प्रकाशितः ।

महदिदं प्रमोदस्थानं पण्डितानां यत् आचार्यश्रीभगवत्पादीयसिद्धान्तप्रचारणबद्धदीक्षैर्वेदान्तग्रन्थानां मुद्रणादिना संरक्षणकुतूहलैः स्वयमपि वेदान्तशास्त्रनदीष्णैर्महामण्डलेश्वरैः काशीदक्षिणामूर्तिपीठाध्यक्षैः **श्रीमहेशानन्दगिरिमहाराजैः** स्थापितेन महेशानुसंधानसंस्थानेन प्रकाशिते बृहदारण्यकभाष्यसहितसुरेश्वराचार्यवार्तिके सम्बन्धवार्तिकात्मकः प्रथमो भागः इदानीं मुद्राप्य पण्डितानां पुरतः समुपस्थाप्यत इति ।

अत्र ग्रन्थसंशोधनादिना कठिनतरेऽस्मिन् समारम्भे अखर्वेण श्रमेण श्रद्धया बहूपकृतवतां **श्रीशारदानन्दशास्त्रि**महोदयानां तथा **श्रीवंशपतिद्विवेदिशास्त्रि**महोदयानां च कार्तज्ञ्यं प्रकाश्य तेषां सप्रमोदं धन्यवादान् समर्पयामि ।

तथा च आनन्दकाननमुद्रणालयस्य प्रभवः संस्कृतैकानुरागिणः **श्रीविश्वम्भरनाथद्विवेदि**महोदयाः सोद्योगं विशेषपरिश्रमपुरस्सरमल्पीयसैव कालेनेदं मुद्रितवन्तः । तेभ्यो बहुशो धन्यवादा भवन्त्विति ।

अद्वैतग्रन्थसद्रत्नमञ्जूषान्तर्गतं शुभम् ।
सटीकवार्तिकोद्दीप्तं भाष्यरत्नं सतां मुदे ॥

विदुषां वशंवदः
**एस० सुब्रह्मण्यशास्त्री**
**महेशानुसन्धानसंस्थाननिदेशकः**

## विषयविन्यासः

•

ॐ

काण्वशाखीया

# बृहदारण्यकोपनिषत्

सटीकशाङ्करभाष्योपेता

## प्रथमाध्याये प्रथमं ब्राह्मणम्

### श्रीमच्छङ्करभगवत्पादाचार्यविरचितं भाष्यम्

**ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशर्षिभ्यो नमो गुरुभ्यः।**

**"उषा वा अश्वस्य"** इत्येवमाद्या वाजसनेयिब्राह्मणोपनिषत्। **तस्या इयमल्पग्रन्था** वृत्तिरारभ्यते संसार-

### श्रीमदानन्दगिर्याचार्यविरचितभाष्यटीका**न्यायनिर्णयः**

यदविद्यावशाद्विश्वं दृश्यते रशनाहिवत्। यद्विद्यया च तद्धानिस्तं वन्दे पुरुषोत्तमम्॥ १ ॥ १०

नमस्त्रय्यन्तसन्दोहसरसीरुहभानवे। गुरवे परपक्षौघध्वान्तध्वंसपटीयसे॥ २ ॥

भगवत्पादपादाब्जद्वन्द्वं द्वन्द्वनिबर्हणम्। सुरेश्वरादिसद्भृङ्गैरवलम्बितमाभजे॥ ३ ॥

बृहदारण्यके भाष्ये शिष्योपकृतिसिद्धये। सुरेश्वरोक्तिमाश्रित्य क्रियते **न्यायनिर्णयः**॥ ४ ॥

काण्वोपनिषद्विवरणव्याजेनाशेषामेवोपनिषदं शोधयितुकामो भगवान्भाष्यकारो विघ्नोपशमादिसमर्थं शिष्टाचारप्रमाणकं परापरगुरुनमस्काररूपं मङ्गलमाचरति—**नमो ब्रह्मादिभ्य इति।** वेदो हिरण्यगर्भो वा ब्रह्म, १५ तन्नमस्कारेण सर्वा देवता नमस्कृता भवन्ति [1]तदर्थत्वात्तदात्मकत्वाच्च "एष उ ह्येव सर्वे देवाः" इति श्रुतेः। आदिपदेन परमेष्ठिप्रभृतयो गृह्यन्ते। यद्यपि तेषामुक्तो ब्रह्मान्तर्भावस्तथाऽपि तेष्वनादरनिरासार्थं [2]पृथग्ग्रहणम्। चतुर्थी नमो योगे। नमःशब्दस्त्रिविध[3]प्रह्वीभावविषयः। ननु ब्रह्मविद्यां वक्तुकामेन किमित्येते नमस्क्रियन्ते सैव हि वक्तव्येत्यत आह—**ब्रह्मविद्येति।** एतेषां तत्सम्प्रदायकर्तृत्वे [4]वंशब्राह्मणं प्रमाणयति—**वंशर्षिभ्य इति।** यद्यपि तत्र पौतिमाष्यादयो ब्रह्मान्ताः सप्रदायकर्तारः श्रूयन्ते तथाऽपि गुरुशिष्यक्रमेण ब्रह्मणः प्राथम्यमिति तदादित्वमिति भावः। २० सम्प्रत्यपरगुरून्नमस्करोति—**नमो गुरुभ्य इति।** यद्यपि ब्रह्मविद्यासंप्रदायकर्त्रन्तर्भावादेते प्रागेव नमस्कृतास्तथाऽपि शिष्याणां गुरुविषयादरातिरेककार्यर्थं पृथग्गुरुनमस्करणम्। [5]"यस्य देवे परा भक्तिः" इत्यादिश्रुतेरिति।

यदुद्दिश्य मङ्गलमाचरितं तत्प्रतिज्ञातुं प्रतीकमादत्ते—**उषा वा इति।** एतेन चिकीर्षिताया वृत्तेर्भर्तृप्रपञ्चभाष्येणागतार्थत्वमुक्तम्। तद्धि द्वया हेत्यादिमाध्यन्दिनश्रुतिमधिकृत्य प्रवृत्तम्। इयं पुनः "उषा वा अश्वस्य" इत्यादिकाण्वश्रुतिमाश्रित्येति। अथोद्देश्यं निर्दिशति—**तस्या इति।** भर्तृप्रपञ्चभाष्याद्विशेषान्तरमाह—**अल्पग्रन्थेति।** अस्या २५ ग्रन्थतोऽल्पत्वेऽपि नार्थतस्तथात्वमिति ग्रन्थस्य ग्रहणम्। वृत्तिशब्दो भाष्यविषयः। सूत्रानुकारिभिर्वाक्यैः सूत्रार्थस्य स्वपदानां चोपवर्णनस्य भाष्यलक्षणस्यात्र भावादिति। ननु कर्मकाण्डाधिकारिणो विलक्षणोऽधिकारी न ज्ञानकाण्डे संभवति। अर्थित्वादेः साधारणत्वाद्वैराग्यादेश्च दुर्वचनत्वात्। न च निरधिकारं शास्त्रमारम्भमर्हतीत्यत आह—**संसारेति।** कर्मकाण्डे हि [6]स्वर्गादिकामः संसारपरवशो [7]नरपशुरधिकारी। इह तु संसाराद्व्यावृत्तिमिच्छवो विरक्ताः। न च वैराग्य दुर्वचं शुद्धबुद्धेर्विवेकिनो ब्रह्मलोकान्ते संसारे तत्संभवात्। ३०

---

केदारेशं च विश्वेशं ढुण्ढिं च गणनायकम्। विद्यागुरून् कृपापूर्णान् भाष्यकारमुखान् भजे॥

१. वेदार्थत्वात् हिरण्यगर्भात्मकत्वाच्च। २. पृथग्ग्रहणम्—इदमेव ब्राह्मणपरिव्राजकन्यायस्य प्रयोजनम्।

३. प्रह्वीभावः स्वापकर्षबोधानुकूलव्यापारः। स च कायिकादिभेदेन त्रिविधः।

४. वंशब्राह्मणे पौतिमाष्यः आरम्भे अन्ते च ब्रह्मा उक्तः तच्च शिष्यक्रमेण, गुरुक्रमेण त्विह ब्रह्मादयः इत्युक्तम्।

५. "यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इति शेषः। ३५

६. आदिना पशुपुत्रादीनां ग्रहणम्। ७. नरः पशुरिव नरपशुः।

**व्याविवृत्सुभ्यः संसारहेतुनिवृत्तिसाधनब्रह्मात्मैकत्वविद्याप्रतिपत्तये। सेयं ब्रह्मविद्योपनिषच्छब्दवाच्या तत्पराणां सहेतोः संसारस्यात्यन्तावसादनात्। उपनिपूर्वस्य सदेस्तदर्थत्वात्। तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते। सेयं षडध्याय्यरण्येऽनूच्यमानत्वादारण्यकम्। बृहत्त्वात्परिमाणतो बृहदारण्यकम्। तस्यास्य कर्मकाण्डेन संबन्धोऽभिधीयते।**

उक्तं हि—"शोध्यमानं तु तच्चित्तमीश्वरार्पितकर्मभिः। वैराग्यं ब्रह्मलोकादौ व्यनक्त्याशु सुनिर्मलम्" ॥ इति

५ अतो यथोक्तविशिष्टाधिकारिभ्यो वृत्तेरारम्भः संभवतीत्यर्थः। तथाऽपि विषयप्रयोजनसंबन्धानामभावे कथं वृत्तिरारभ्यते तत्राऽऽह—**संसारहेत्विति**। प्रमातृताप्रमुखः कर्तृत्वादिरनर्थः संसारस्तस्य हेतुरात्माविद्या तन्निवृत्तेः साधनं ब्रह्मात्मैकत्वविद्या तस्याः प्रतिपत्तिरप्रतिबद्धायाः प्राप्तिस्तदर्थं वृत्तिरारभ्यत इति योजना। एतदुक्तं भवति—सनिदानानर्थनिवृत्तिः शास्त्रस्य प्रयोजनम्। ब्रह्मात्मैक्यविद्या तदुपायः। तदैक्यं विषयः। संबन्धो ज्ञानफलयोरुपायोपेयत्वम्। शास्त्रतद्विषययोर्विषयविषयित्वं तदारभ्यं शास्त्रमिति।

१० प्रयोजनादिषु प्रवृत्त्यङ्गतयोक्तेष्वपि सर्वव्यापाराणां प्रयोजनार्थत्वात्तस्य प्राधान्यम्। उक्तं हि—
"सर्वस्यैव हि शास्त्रस्य कर्मणो वाऽपि कस्यचित्। यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते" ॥ इति

तथाच शास्त्रारम्भौपयिकं प्रयोजनमेव नामव्युत्पादनद्वारा व्युत्पादयति—**सेयमिति**। अध्यात्मशास्त्रेषु प्रसिद्धा संनिहिता चात्र ब्रह्मात्मैक्यविद्या तन्निष्ठानां सर्वकर्मसंन्यासिनां सनिदानस्य संसारस्यात्यन्तनाशकत्वाद्भवति उपनिषच्छब्दवाच्या। "उपनिषदं भो ब्रूहि" इत्याद्या च श्रुतिः। तस्मादुपनिषच्छब्दवाच्यत्वप्रसिद्धेर्विद्यायास्ततो
१५ यथोक्तफलसिद्धिरित्यर्थः। कथं तस्यास्तच्छब्दवाच्यत्वेऽप्येतावानर्थो लभ्यते तत्राऽऽह—**उपनिपूर्वस्येति**। अस्यार्थः—"षद्लृ विशरणगत्यवसादनेषु" इति स्मर्यते। सदेर्धातोरुपनिपूर्वस्य क्विबन्तस्य सहेतुसंसारनिवर्तकब्रह्मविद्यार्थत्वादुपनिषच्छब्दवाच्या सा भवत्युक्तफलवती। उपशब्दो हि सामीप्यमाह। तच्चासति संकोचके प्रतीचि पर्यवस्यति। निशब्दश्च निश्चयार्थस्तस्मादैकात्म्यं निश्चितं तद्विद्या सहेतुं संसारं सादयतीत्युपनिषदुच्यते। उक्तं हि—"[1]अवसादनार्थस्य चावसादात्" इति। ब्रह्मविद्यैव चेदुपनिषदिष्यते कथं तर्हि ग्रन्थे वृद्धास्तच्छब्दं प्रयुञ्जते
२० न खल्वेकस्य शब्दस्यानेकार्थत्वं [2]न्याय्यमित्याशङ्क्याऽऽह—**तादर्थ्यादिति**। ग्रन्थस्य ब्रह्मविद्याजनकत्वादुपचारात्तत्र उपनिषत्पदमित्यर्थः।

यथोक्तविद्याजनकत्वे ग्रन्थस्य किमिति तदध्येतॄणां सर्वेषां विद्या न भवतीत्याशङ्क्य श्रवणादिपराणामेवारण्यानुवचनादिनियमाधीताक्षरेभ्यस्तज्जन्मेति बृहदारण्यकनामनिर्वचनपूर्वकमाह—**सेयमिति**। अथ [3]अरण्यानुवचनादिनियमाधीतवेदान्तानामपि केषांचिद्विद्यानुपलम्भात्कुतो यथोक्ताक्षरेभ्यस्तदुत्पत्तिरित्यत आह—**बृहत्त्वादिति**।
२५ उपनिषदन्तरेभ्यो ग्रन्थपरिमाणातिरेकादस्य बृहत्त्वं प्रसिद्धमर्थतोऽपि तदस्ति ब्रह्मणोऽखण्डैकरसस्यात्र प्रतिपाद्यत्वात्तज्ज्ञानहेतूनां चान्तरङ्गबहिरङ्गाणां[4] भूयसामिह प्रतिपादनात्। अतो बृहत्त्वादारण्यकत्वाच्च बृहदारण्यकम्। न चैतदशुद्धबुद्धेरधीतमपि विद्यामादधाति। "[5]कषाये कर्मभिः पक्वे ततो ज्ञानम्" इति स्मृतेरित्यर्थः। ज्ञानकाण्डस्य [6]विशिष्टाधिकार्यादिवैशिष्ट्येऽपि कर्मकाण्डेन नियतपूर्वापरभावानुपपत्तिलभ्यः संबन्धो वक्तव्यः। स च [7]परीक्षकविप्रतिपत्तेरशक्यो विशेषतो ज्ञातुमित्याशङ्क्याऽऽह—**तस्येति**।

---

३० १. अवसादनार्थस्य सदेः निष्पन्नः सकारणस्य संसारस्य तेनावसादात् ब्रह्मविद्योपनिषदुच्यते इत्यर्थः।
२. अन्यायश्चानेकशब्दत्वं ( जै. सू. १-३-१६ ) वार्तिकञ्च—एकात्मकयोरेव हि वाच्यवाचकयोरन्योन्याक्षेपात् परस्परनियमः सम्भवति अन्यतरस्यापि नत्वनेकत्वे सति व्यभिचारान्नियमहानेरिति।
३. अरण्यं प्राकृतजनासङ्कीर्णो देशः।
४. अन्तरङ्गानि—ज्ञानहेतूनि शमदमादीनि "शान्तो दान्तः" इत्यादिवाक्योक्तानि। बहिरङ्गानि—यज्ञादीनि
३५ "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इत्युक्तानि।
५. कषायो बहुविधसंस्कारयुक्तं मनः, तस्य पाको रागादिमलराहित्यम्।
६. विशिष्टाधिकारी साधनचतुष्टयविशिष्टोऽधिकारिविशेषः।
७. परीक्षकविप्रतिपत्तिः केचन पूर्वोत्तरमीमांसे एकं शास्त्रं ततः तदध्ययनानन्तरमिति वदन्ति। केचन कर्मकाण्ड-[illegible]ः। अतो विप्रतिपत्तिः।

**सर्वोऽप्ययं वेदः प्रत्यक्षानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिपरिहारोपायप्रकाशनपरः[1] सर्वपुरुषाणां निसर्गत एव तत्प्राप्तिपरिहारयोरिष्टत्वात्। [2]दृष्टविषये चेष्टानिष्टप्राप्तिपरिहारोपायज्ञानस्य प्रत्यक्षानुमानाभ्यामेव सिद्धत्वान्नाऽऽगमान्वेषणम्।**

प्रतिज्ञातं संबन्धं प्रकटयितुमसिद्धप्रमाणभावानां वेदान्तानां संबन्धाभिधानावसराभावात्तत्प्रामाण्यं प्रतिपाद्य पश्चात्तेषां कर्मकाण्डेन संबन्धविशेषवचनमुचितमिति मन्वानस्तत्प्रामाण्यं साधयति—**सर्वोऽपीति**। प्रत्यक्षानुमानाभ्यामित्यागमातिरिक्तप्रमाणोपलक्षणार्थम्[3]। एषोऽर्थः—अध्ययनविध्युपात्तः सर्वोऽपि [4]काण्डद्वयात्मको वेदो मानान्तरानधिगतं यदिष्टोपायादि तज्ज्ञापनपरः, तथा चाज्ञातज्ञापकत्वाविशेषात्तुल्यं प्रामाण्यं काण्डयोरिति। अथवा वेदनं [5]वेदोऽनुभवः। स च शब्देतरमानायोग्यो रूपादिहीनत्वात्। "[6]एतदप्रमयम्" इति हि श्रुतिः। स चेष्टानिष्टप्राप्तिपरिहारोपायस्तस्यैव तत्तदात्मनाऽवस्थानात्। "सच्च त्यच्चाभवत्" इत्यादिश्रुतेः। स च प्रकाशनः सर्वप्रकाशकत्वात्। "तमेव भान्तमनुभाति सर्वम्" इति श्रुतेः। स च परोऽविद्यातत्कार्यातीतत्वात्। "विरजः पर आकाशात्" इत्यादिश्रुतेः। एवंरूपो वेदपदवेदनीयश्चिदेकरसः प्रत्यग्धातुरेव सर्वोऽपि कार्यकारणात्मकः प्रपञ्चः। "[7]आत्मैवेदं सर्वम्" इति श्रुतेः। तथाच यथोक्तं वस्तु प्रकाशयन्तो वेदान्ता विधिवाक्यवत्प्रमाणमिति। अथवा प्रत्यक्षादिनाऽनवगतो योऽसाविष्टप्राप्त्याद्युपायो [8]ब्रह्मात्मा तस्य प्रकाशनपरः सर्वोऽप्ययं वेदः। तस्यैवाज्ञातत्वात्तत्र कर्मकाण्डं कर्मानुष्ठानप्रयुक्तबुद्धिशुद्धिद्वारा [9]ब्रह्माधिगतावारादुपकारकम्। "विविदिषन्ति यज्ञेन" इति श्रुतेः। ज्ञानकाण्डं तु साक्षादेव तत्रोपयुक्तम्। परमपुरुषस्यौपनिषदत्वश्रवणात्। "सर्वे वेदा यत्पदमामनन्ति" इति च श्रुतेः। तद्युक्तं कर्मकाण्डवज्ज्ञानकाण्डस्यापि प्रामाण्यमिति। अधिकारिसौलभ्यप्रतिपादनद्वारा ज्ञानकाण्डप्रामाण्यमेव स्फुटयति—**सर्वपुरुषाणामिति**। अयमर्थः—सुखं मे स्याद्दुःखं मा भूदिति स्वभावतः शास्त्रं विना सर्वेषां पुरुषाणामनवच्छिन्नसुखादिमात्रेऽभिलाषोपलम्भात्तन्मात्रस्य च मोक्षत्वात्तत्कामिनो ज्ञानकाण्डाधिकारिणः सुलभत्वात्तस्मिन्प्रमां स्वार्थविषयामादधत्कथं तदप्रमाणमिति।

ननु वेदस्य कार्यपरतया प्रामाण्यात्कर्मकाण्डवत् काण्डान्तरस्यापि कार्यपरतया प्रामाण्यमेष्टव्यमिति नेत्याह—**दृष्टविषय इति**। [10]क्रियाकारकफलेतिकर्तव्यतानामन्यतमस्मिन्कार्ये समीहितप्राप्त्याद्युपायभूते व्युत्पत्तिकाले

---

१. इष्टप्राप्त्यनिष्टपरिहारोपायप्रदर्शनपरः। प्रत्यक्षेणानुमानेन यस्तूपायो न बुध्यते। "एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता" इत्युक्तत्वात्।

२. प्रत्यक्षेण भोजनं तृप्तिं चोपलभ्य तयोः अन्वयव्यतिरेकलिङ्गेन कार्यकारणभावोऽनुमीयते भोजनं तृप्तिसाधनं तदन्वयानुविधाय्यन्वयकत्वे सति तद्व्यतिरेकानुविधायिव्यतिरेकादिति प्रयोगः।

३. उपमानार्थापत्त्यनुपलब्धीत्यर्थः।

४. काण्डद्वयं कर्मकाण्डं ज्ञानकाण्डञ्च। उपासनाया मानसकर्मत्वात् कर्मकाण्डेऽन्तर्भावः।

५. वेदोऽनुभवः तद्रूपं ब्रह्मेत्यर्थः।

६. "एतदप्रमयं" अप्रमेयं "अनाशिनोऽप्रमेयस्य" इति गीताभाष्ये आत्मनः प्रमाणप्रवृत्तेः पूर्वमेव स्वप्रकाशतया सिद्धत्वादात्मा न प्रमाणवेद्यः। "न ह्यात्मानमप्रमाय कश्चित् प्रमाणव्यापारे प्रवर्तते" इत्युक्तम्। शब्देनापि लक्षणयैवात्मा वेद्यः, न तु शक्त्या। तदुक्तं "चकितमभिधत्ते श्रुतिरपि" इति।

७. "आत्मैवेदं सर्वमि"ति बाधायां सामानाधिकरण्यं, यदिदं सर्वं तदात्मैव तद्व्यतिरेकेण नास्तीत्यर्थः।

८. अज्ञानविषयो ब्रह्मैव, घटादिकं तु अज्ञानविषयतत्त्वच्छेदकमेव। तस्य जडत्वेन तत्राज्ञानाप्रसक्तेः। अत एव वार्तिके—"अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः" इति।

९. आरात् दूरे उपकारकं चित्तशुद्धिद्वारा परम्परया साधनम्।

१०. प्राभाकराः आहुः लोके गामानयेतिवाक्यात् सेवकप्रवृत्तिमुपलभ्य सर्वा प्रवृत्तिः कार्यताज्ञानसाध्येति व्युत्पत्तिर्भवति। ततश्च यत्र कार्यताबोधकं पदं नास्ति तत्र "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादौ कार्यतावाचिपदमध्याहृत्यैवोपासनादिरूपं कार्यमेव विधेयं, सिद्धबोधिपदैर्व्युत्पत्तिश्च नास्तीति। तन्निराचष्टे, क्रिया कारकेति। तथा च व्युत्पत्तिकाले कार्यताज्ञानमपेक्षितं यद्यपि, तथापि तस्य प्रत्यक्षादिना लब्धत्वान्न पदानां कार्यान्विते शक्तिः स्वीकार्या। सिद्धबोधिपदैर्व्युत्पत्तिश्च "पुत्रस्ते जातः" इत्यादौ प्रदर्शिता समन्वयसूत्रभामत्याम्।

**न ह्यसति जन्मान्तरसंबन्ध्यात्मास्तित्वविज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात् [1]स्वभाववादिदर्शनात्। तस्माज्जन्मान्तरसंबन्ध्यात्मास्तित्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहारोपायविशेषे च शास्त्रं प्रवर्तते। "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके" इत्युपक्रम्या"स्तीत्येवोपलब्धव्य" इत्येवमादिनिर्णयदर्शनात्। "यथा च मरणं प्राप्य" इत्युपक्रम्य—**

५ **"योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्"**

**इति च। "स्वयं ज्योतिः" इत्युपक्रम्य "तं विद्याकर्मणी समन्वारभेते" "पुण्यो वै पुण्येन कर्मणा भवति**

प्रत्यक्षादिसिद्धे तथाविधकार्यधियोऽन्यथालब्धत्वात्तत्र नाऽऽगमोऽनुसन्धेयः। न हि लोकवेदयोस्तद्भिद्यते। अलौकिके तस्मिन्नव्युत्पत्तिप्रसङ्गात्। न चाव्युत्पन्नानि पदानि[2] बोधकान्यतिप्रसङ्गात्। न च ब्रह्मण्यपि तुल्या व्युत्पत्त्यनुपपत्तिः। तस्मिन्ब्रह्मत्वेनाऽऽत्मत्वेन च प्रसिद्धेः। तत्तत्सामान्योपाधौ विज्ञानादिपदानां व्युत्पत्तेः सुकरत्वात्। तानि चालौ-
१० किकमखण्डं प्रत्यग्ब्रह्म निर्लुठितसामान्यविशेषं[3] लक्षणया बोधयन्ति। तस्माद्ब्रह्मैव वेदप्रमाणकं न कार्यमिति भावः। किञ्च तिष्ठतु वेदान्तप्रामाण्यं कर्मकाण्डेऽपि व्यतिरिक्तात्मास्तित्वादौ सिद्धेऽर्थे प्रामाण्यमावश्यकम्। [4]तदभावे तत्प्रामाण्यायोगात् न हि भविष्यद्देहसंबन्ध्यात्मसद्भावानधिगमे पारलौकिकप्रवृत्तिविश्रम्भः। तस्मात्कर्मकाण्डप्रामाण्यमिच्छता सिद्धेऽर्थे भविष्यद्देहसंबन्धिन्यात्मनि [5]स्वर्गादौ च तत्प्रामाण्यस्याभ्युपेयत्वात्कार्ये वेदप्रामाण्यानियमाद्वेदान्तानामपि स्वार्थे मानत्वं सिध्यतीत्याह—**न चेति**। ननु देहान्तरसंबन्ध्यात्मज्ञानं विनाऽपि विधिवशाददृष्टार्थक्रियासु
१५ प्रवृत्तिः स्यादिति नेत्याह—**स्वभावेति**। यदाऽऽत्मा देहान्तरसम्बन्धी शास्त्रान्मानान्तराच्च न प्रमितस्तदा भोक्तुरनवगमान्न प्रेक्षापूर्वकारी यागाद्यनुतिष्ठेत्। लोकायतस्य व्यतिरिक्तात्मास्तित्वमजानतो जन्मान्तरेष्टानिष्टप्राप्तिहानीच्छया वैदिकक्रियास्वप्रवृत्तेर्दर्शनात्। अतो नातिरिक्तात्मज्ञानं विना [6]साम्परायिके प्रवृत्तिरित्यर्थः।

ननु विधयः साधनविशेषं बोधयन्तो नातिरिक्तात्मास्तित्वादौ मानं वाक्यभेदप्रसङ्गादित्यत आह—**तस्मादिति**। अतिरिक्तात्मधियं विना पारलौकिकप्रवृत्त्यनुपपत्त्या कर्मकाण्डप्रामाण्यायोगादिति यावत्। विधीनां श्रुत्यर्था-
२० भ्यामुभयार्थत्वमविरुद्धमित्यर्थः। न केवलं विधिभिरेवार्थादाक्षिप्तमतिरिक्तात्मास्तित्वं किंतु श्रुत्याऽपि स्वमुखेनोक्तमित्याह—**येयमिति**। निर्णयदर्शनाद्व्यतिरिक्तात्मास्तित्वमिति सम्बन्धः। तत्रैव प्रकृतोपयोगित्वेनोपक्रमोपसंहारान्तरे दर्शयति—**यथा चेति**। पूर्ववदेव सम्बन्धद्योतनार्थं चकारः। उपक्रमोपसंहारैकरूप्यात्**कठवल्लीनाम**तिरिक्तात्मास्तित्वे तात्पर्यमुक्त्वा **बृहदारण्यक**वाक्यस्यापि तत्र तात्पर्यमाह—**स्वयमिति**। न हि प्रसिद्धजडत्वस्य देहादेः स्वयंज्योतिष्ट्वमिति ज्योतिर्ब्राह्मणगतोपक्रमस्तद्विषयो देहादिव्यतिरिक्तात्मानमधिकरोति। तं प्रेतं विद्याकर्मणी पूर्वोपार्जिते फल-
२५ दानायानुगच्छतः। स च गत्वा ज्ञानकर्मानुगुणं फलमनुभवतीति शारीरकब्राह्मणगतोपसंहारोऽपि जन्मान्तरसम्बन्धिविषयः। न चात्रैव भस्मीभवतो देहादेर्जन्मान्तरसम्बन्धो युक्तः। तेनाऽऽत्मा देहादिव्यतिरिक्तो जन्मान्तरसम्बन्धी सिद्धो ब्राह्मणाभ्यामित्यर्थः। अजातशत्रुब्राह्मणे च व्येव त्वा ज्ञपयिष्यामीत्युपक्रमो व्यतिरिक्तात्मास्तित्वविषयः। न हि प्रत्यक्षे देहादौ जिज्ञासाऽस्ति। तत्रैवोपसंहारे "य एष विज्ञानमयः पुरुषः" इति विज्ञानमयविशेषणादतिरिक्तात्मास्तित्वं दर्शितं न हि देहादेर्विज्ञानमयत्वमस्ति तस्मात्तदप्युपक्रमोपसंहाराभ्यां व्यतिरिक्तात्मास्तित्वं गमय-

---

३० १. स्वभाववादः—जलशैत्यादिवत् सर्वं स्वभावसिद्धं, न कारणात्कार्यमिति वादः।
२. अव्युत्पन्नपदानां बोधकत्वे भाषानभिज्ञस्यापि बोधः स्यात्।
३. सामान्यविशेषरहितं शुद्धत्वात्।
४. परलोकसञ्चार्यात्माभावे परलोकार्थकर्मवाक्यस्याप्रामाण्यं स्यात्।
५. स्वर्गादौ—"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
३५ अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥" इति
वाक्यात् स्वर्गपदार्थविज्ञानम्। यत्र साधनार्जनदुःखं नास्ति, फलानुभवानन्तरं व्याध्यादि च नास्ति। केवलमिच्छया सर्वे पदार्था लभ्यन्त इत्यर्थः।
६. साम्परायिकं=परलोकसाधनं कर्म।

**पापः पापेन" इति च "ज्ञपयिष्यामि" इत्युपक्रम्य "विज्ञानमय" इति च व्यतिरिक्तात्मास्तित्वम्। तत्प्रत्यक्ष-
विषयमेवेति चेत्। न, वादिविप्रतिपत्तिदर्शनात्। न हि देहान्तरसंबन्धिन आत्मनः प्रत्यक्षेणास्तित्वविज्ञाने लोकाय-
तिका बौद्धाश्च नः प्रतिकूलाः स्युर्नास्त्यात्मेति वदन्तः। न हि घटादौ प्रत्यक्षविषये कश्चिद्विप्रतिपद्यते नास्ति घट
इति। स्थाण्वादौ पुरुषादिदर्शनान्नेति चेत्। न। निरूपितेऽभावात्। न हि प्रत्यक्षेण निरूपिते स्थाण्वादौ विप्रति-
पत्तिर्भवति। वैनाशिकास्त्वहमितिप्रत्यये जायमानेऽपि देहान्तरव्यतिरिक्तस्य नास्तित्वमेव प्रतिजानते। तस्मात्** ५
**प्रत्यक्षविषयवैलक्षण्यात्प्रत्यक्षान्नाऽऽत्मास्तित्वसिद्धिः। तथाऽनुमानादपि। श्रुत्याऽऽत्मास्तित्वे लिङ्गस्य दर्शितत्वा-
ल्लिङ्गस्य च प्रत्यक्षविषयत्वान्नेति चेत्। न। जन्मान्तरसम्बन्धस्याग्रहणात्। आगमेन त्वात्मास्तित्वेऽवगते वेद-**

तीत्याह—**ज्ञपयिष्यामीत्युपक्रम्येति**। न चोदाहृतानां वाक्यानामप्रामाण्यम्। तत्प्रामाण्यस्यौत्पत्तिकसूत्रे[1] हेत्वविशेषा-
दभ्युपेयत्वादिति भावः।

यथोक्तात्मन्यहंप्रत्ययो मानं तत्र देहाकारास्फुरणादतिरिक्तात्मास्तित्वस्य तेनैव स्फूर्त्युपपत्तेरतो न तत्र १०
श्रुतिप्रामाण्यमिति शङ्कते—**तत्प्रत्यक्षेति**। प्रत्यक्षस्य विषयोऽवकाशो यस्मिन्नित्यतिरिक्तात्मास्तित्वमुच्यते। यद्यपि
व्यतिरिक्तात्मास्तित्वं त्वदभिप्रायेणाहंधीगोचरस्तथाऽपि न सा व्यतिरेकमात्मनो गोचरयति युक्त्यागमविवेकशून्या-
नामहंप्रत्ययभाजां व्यतिरेकप्रत्ययप्राप्तौ, विपश्चितां विप्रतिपत्त्यभावप्रसङ्गादिति परिहरति—**न वादीति**। वेदप्रति-
कूला वादिनो नास्तिका नैव विवादं मुञ्चन्तीत्याह—**न हीति**। तेषु प्रातिकूल्यसंभावनार्थं विशेषणं नेत्यादि। इति
वदन्तः सन्तो नोऽस्माकं प्रतिकूला न हि स्युरेवं वदनस्यैवासंभवादध्यक्षविरोधादिति योजना। प्रत्यक्षे विषये १५
विप्रतिपत्त्यभावे दृष्टान्तमाह—**न हीति**।

तत्र व्यभिचारं शङ्कते—**स्थाण्वादाविति**। प्रत्यक्षे धर्मिणि स्थाणुर्वा पुरुषो वेति विप्रतिपत्तेरुपलम्भान्न
प्रत्यक्षे विप्रतिपत्त्यभावो व्यभिचारादिति शङ्कार्थः। आदिपदेन पाषाणादौ गजादिविप्रतिपत्तिः संगृह्यते। किं
प्रत्यक्षमात्रेऽविप्रतिपत्तिः किं वा तेन विविक्ते प्रतिपन्ने। नाऽऽद्योऽनङ्गीकारात्। न चैवमात्मनि प्रत्यक्षे विप्रतिपत्तावपि
नाऽऽगमान्वेषणा। तेनैव तन्निरासेन तन्निर्णयादिति मन्वानो द्वितीयं दूषयति—**नेत्यादिना**। प्रत्यक्षतो विविक्तेऽर्थे २०
विप्रतिपत्त्यभावं प्रपञ्चयति—**न हीति**। आत्मनः स्थूलदेहव्यतिरिक्तत्वं न प्रत्यक्षमिति प्रतिपाद्य सूक्ष्मदेहव्यतिरिक्त-
त्वमपि नाहंप्रत्ययग्राह्यमित्याह—**वैनाशिकास्त्विति**। ते खल्वहमिति धियमनुभवन्ति। तथाऽपि देहान्तरं स्थूल-
देहातिरिक्तं सूक्ष्मं तत्र प्रधानभूताया बुद्धेरतिरिक्तस्याऽऽत्मनो नास्तित्वमेव पश्यन्ति। तन्नाहंधिया सूक्ष्मदेहाति-
रिक्तात्मसिद्धिरित्यर्थः।

किञ्च प्रत्यक्षस्य विषयो रूपादिस्तद्राहित्यं तद्वैलक्षण्यं तदात्मनोऽस्ति। "अशब्दमस्पर्शमरूपम्" इत्यादि- २५
श्रुतेः। न हि रूपादि तदाधारं वा विना प्रत्यक्षं क्रमते। अतो न देहाद्यतिरिक्तात्मास्तित्वस्य प्रत्यक्षात्प्रसिद्धि-
रित्याह—**तस्मादिति**। प्रत्यक्षतो विविक्ते विप्रतिपत्त्ययोगात्। प्रकृते च तद्दर्शनादिति यावत्। अथेच्छादयः क्वचि-
दाश्रिता गुणत्वाद्रूपवदित्यनुमानादतिरिक्तात्मसिद्धिरिति नेत्याह—**तथेति**। नाऽऽत्मास्तित्वप्रसिद्धिरिति सम्बन्धार्थ-
स्तथाशब्दः। अयं भावः—इच्छादीनां स्वातन्त्र्ये स्वरूपासिद्धिः पारतन्त्र्ये परस्पराश्रयत्वमाधारस्येदानीमेव साध्य-
मानत्वात्। क्वचिच्छब्देन चाऽऽश्रयमात्रवचने सिद्धसाधनत्वं मनसस्तदाश्रयस्य सिद्धत्वात् आत्मोक्तौ च दृष्टान्तस्य ३०
साध्यविकलतेति। "यः प्राणेन प्राणिति" इत्यादिश्रुत्या प्राणनादिव्यापाराख्यस्य लिङ्गस्याऽऽत्मास्तित्वे प्रदर्शित-
त्वात्तस्य च व्याप्तिसापेक्षस्य प्रत्यक्षादिसिद्धात्मविषयत्वान्न तस्य शब्दैकगम्यतेति शङ्कते—**श्रुत्येति**। आत्मनः
स्वातन्त्र्येण लिङ्गगम्यत्वाभिप्रायेण श्रत्या लिङ्गं नोपन्यस्तमिति परिहरति—**नेति**। योऽचेतनव्यापारः स चेतनाधि-
ष्ठानपूर्वको यथा रथादिव्यापारः। प्राणनादिव्यापारस्याप्यचेतनव्यापारत्वाच्चेतनाधिष्ठानपूर्वकत्वमिति संभावना-
मात्रेण लिङ्गोपन्यासः। न हि निश्चायकत्वेन तदुपन्यस्यते। आत्मनो जन्मान्तरसम्बन्धस्य प्रमाणान्तरेणाग्रहणात् ३५
तद्व्याप्तलिङ्गायोगादित्याह—**जन्मान्तरेति**। ननु व्यतिरिक्तात्मास्तित्वमागमैकगम्यं चेत्कथं तत्प्रत्यक्षमनुमेयं चेति

---

१. औत्पत्तिकं सूत्रं—औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः। तस्य ज्ञानमुपदेशः, अव्यतिरेकश्चार्थे अनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ( पू. मी. १–१–५ ) इति सूत्रे वेदसामान्यस्यानपेक्षत्वेन प्रामाण्यमुक्तम्।

**प्रदर्शितलौकिकलिङ्गविशेषैश्च तदनुसारिणो मीमांसकास्तार्किकाश्चाहंप्रत्ययलिङ्गानि च वैदिकान्येव स्वमतिप्रभवानीति कल्पयन्तो वदन्ति प्रत्यक्षश्चानुमेयश्चाऽऽत्मेति। [1]सर्वथाऽप्यस्त्यात्मा देहान्तरसम्बन्धीत्येवं प्रतिपत्तुर्देहान्तरगतेष्टानिष्टप्राप्तिपरिहारोपायविशेषार्थिनस्तद्विशेषज्ञापनाय कर्मकाण्डमारब्धम्। न त्वात्मन इष्टानिष्टप्राप्तिपरिहारेच्छाकारणमात्मविषयमज्ञानं कर्तृभोक्तृस्वरूपाभिमानलक्षणं तद्विपरीतब्रह्मात्मस्वरूपविज्ञानेनापनीतम्। यावद्धि तन्नापनोयते तावदयं कर्मफलरागद्वेषादिस्वाभाविकदोषप्रयुक्तः शास्त्रविहितप्रतिषिद्धातिक्रमेणापि प्रवर्तमानो मनोवाक्कायैर्दृष्टादृष्टानिष्टसाधनान्यधर्मसंज्ञकानि कर्माण्युपचिनोति बाहुल्येन स्वाभाविकदोषबलीयस्त्वात्। ततः स्थावरान्ताऽधोगतिः। कदाचिच्छास्त्रकृतसंस्कारबलीयस्त्वम्। ततो मनआदिभिरिष्टसाधनं बाहुल्येनोपचिनोति धर्माख्यम्। तद्द्विविधम्—ज्ञानपूर्वकं केवलं च। तत्र केवलं पितृलोकादिप्राप्तिफलम्। ज्ञानपूर्वकं देवलोकादिब्रह्मलोकान्तप्राप्तिफलम्। तथा च शास्त्रम् "आत्मयाजी श्रेयान्देवयाजिनः" इत्यादि। स्मृतिश्च "द्विविधं**

वादिनो वदन्तोति तत्राऽऽह—**आगमेन त्विति**। "येयं प्रेते विचिकित्से"त्याद्यागमेन "को ह्येवान्यात्" इत्यादिवेदोक्तैश्च प्राणनादिभिर्लौकिकैर्लिङ्गविशेषैरात्मास्तित्वे सिद्धे यथोक्तात्मसिद्धिमनुसरन्तो वादिनो वैदिकमेवाहंप्रत्ययं प्रतिलभमाना वैदिकान्येव च लिङ्गानि पश्यन्तः स्वोत्प्रेक्षानिर्मितानि तानीति कल्पयन्तो [2]द्विधाऽऽत्मानं वदन्ति। वस्तुतस्त्वात्मा यथोक्तश्रुत्येकसमधिगम्य इत्यर्थः।

तस्यास्येत्यादिना काण्डयोः सम्बन्धं प्रतिज्ञाय तादर्थ्येन सिद्धेऽर्थे वेदान्तप्रामाण्यं सर्वोऽपीत्यादिना प्रसाध्य अधुना कर्मभिः शुद्धबुद्धेर्वैराग्यादिद्वारा ज्ञानोत्पत्तिरिति तयोः सम्बन्धं कथयति—**सर्वथाऽपीति**। आगमान्मानान्तराद्वा व्यतिरिक्तात्मास्तित्वप्रतिपत्तावपीत्यर्थः। पुरुषार्थोपायविशेषार्थिनस्तज्ज्ञापनार्थं कर्मकाण्डमारब्धं चेत्तर्हि तत्रोक्तकर्मभिरेव विवक्षितपुमर्थसिद्धेर्वेदान्तारम्भवैयर्थ्यान्न सम्बन्धोक्तिः सावकाशेत्याशङ्क्याऽऽह—**न त्विति**। आत्माज्ञानं खल्वनर्थकारणमन्वयव्यतिरेकशास्त्रगम्यं मिथ्याज्ञानकार्यलिङ्गकं च। तच्चाकर्तृभोक्तृब्रह्मात्मज्ञानादपनेयम्। न हि तत्कर्मकाण्डोक्तैरेव कर्मभिः शक्यमपनेतुं विरोधाभावात्। तस्मात्तद्बाधनार्थं ज्ञानसिद्धये वेदान्तारम्भसम्भवादुक्तसम्बन्धसिद्धिरित्यर्थः। यदि कर्मभिरज्ञानं न निवर्तते। मा निवर्तिष्ट। सत्येव तस्मिन्कर्मवशान्मोक्षः स्यादित्याशङ्क्याऽऽह—**यावद्धीति**। सम्यग्ज्ञानमेव साक्षान्मोक्षहेतुर्न कर्म। तत्तु प्रनाड्या तदुपयोगि। न हि सत्येवाज्ञाने मुक्तिः। तस्मिन्सति संसारस्य दुर्वारत्वात्। तस्मात्कर्मकाण्डस्य वैराग्यद्वारा प्रवेशो मुक्ताविति भावः। अयमित्यज्ञो निर्दिश्यते। रागद्वेषादीत्यादिशब्देनाविद्यास्मिताभिनिवेशादयो गृह्यन्ते। दोषाणां स्वाभाविकत्वं शास्त्रानपेक्षत्वम्। अपिकारः सम्भावनार्थः। दृष्टत्वमन्वयव्यतिरेकसिद्धत्वम्। अदृष्टत्वं शास्त्रमात्रगम्यत्वम्। अधर्मोपचयप्राचुर्ये हेतुमाह—**स्वाभाविकेति**। अथ वैराग्यार्थं कर्मफलं प्रपञ्चयन्नधर्मफलमाह—**तत इति**।

उक्तं हि—"शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इति।

तत्किं पुण्योपचयाभावादनवकाशं स्वर्गादिफलमिति नेत्याह—**कदाचिदिति**। शास्त्रीयसंस्कारस्य बलीयस्त्वे फलितमाह—**तत इति**। आदिशब्दो वाग्देहविषयः। फलविभागं वक्तुं कर्म भिनत्ति—**तद्द्विविधमिति**। तस्य मुक्तिफलत्वं निरसितुं फलं विभजते—**तत्रेति**। केवलमिष्टादिकर्मेति शेषः। "कर्मणा पितृलोकः" इति हि वक्ष्यति। तस्मिन्फले नानात्वमभिप्रेत्याऽऽदिशब्दः। "विद्यया देवलोकः" इति श्रुतिमाश्रित्याऽऽह—**ज्ञानेति**। देवलोको यस्याऽऽदिर्ब्रह्मलोको यस्यान्तस्तस्यार्थस्य प्राप्तिरेव फलमस्येति विग्रहः। उक्तेऽर्थे शातपथीं श्रुतिं प्रमाणयति—**तथा चेति**। सर्वत्र परमात्मभावनापुरःसरं नित्यं कर्मानुतिष्ठन्नात्मयाजी। कामनापुरःसरं देवान्यजमानो देवयाजी। तयोर्मध्ये कतरः श्रेयानिति विचारे सत्यात्मयाजी श्रेयानिति निर्णयः कृतः। अतो ज्ञानपूर्वकं कर्म देवलोकस्य कामनापूर्वं तु पितृलोकस्य प्रापकमित्यर्थः।

---

१. सर्वथाऽपीति—आगमादेव देहान्तरसम्बन्ध्यात्मास्तित्वावगम इति स्वमतम्। परे त्वनुमानात्तदवगमं मन्यन्ते तथा वा भवतु नाम तादृशात्मगतेष्टानिष्टप्राप्तिपरिहारोपायः आगमेनैव ज्ञातव्यस्तदर्थं कर्मकाण्डारम्भः। यद्यपि सामान्यतः उपायसामान्यमवगम्येत, तथापि साधनविशेषोऽग्निहोत्रादिः आगमेनैव बोधनीयः।

२. प्रत्यक्षश्चानुमेयश्चात्मेति।

**कर्म वैदिकम्" इत्याद्या। साम्ये च धर्माधर्मयोर्मनुष्यत्वप्राप्तिः। एवं ब्रह्माद्या स्थावरान्ता स्वाभाविकाविद्यादिदोषवतो धर्माधर्मसाधनकृता संसारगतिर्नामरूपकर्माश्रया। तदेवेदं व्याकृतं साध्यसाधनरूपं जगत्प्रागुत्पत्तेरव्याकृतमासीत् स एष बीजाङ्कुरादिवदविद्याकृतः संसार आत्मनि क्रियाकारकफलाध्यारोपलक्षणोऽनादिरनन्तोऽनर्थ इत्येतस्माद्विरक्तस्याविद्यानिवृत्तये तद्विपरीतब्रह्मविद्याप्रतिपत्त्यर्थोपनिषदारभ्यते। अस्य त्वश्वमेधकर्मसंबन्धिनो विज्ञानस्य प्रयोजनं येषामश्वमेधे नाधिकारस्तेषामस्मादेव विज्ञानात्तत्फलप्राप्तिः। "[१]विद्यया वा कर्मणा वा" "तद्धैतल्लोकजिदेव" इत्येवमादिश्रुतिभ्यः। कर्मविषयत्वमेव विज्ञानस्येति चेत्। न। "योऽश्वमेधेन यजते य उ चैनमेवं** ५

"प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम्। इह वाऽमुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते॥
निष्कामं ज्ञानपूर्वं तु निवृत्तमभिधीयते"॥

इत्यादिमनुस्मृतिं चात्रैवोदाहरति—**स्मृतिश्चेति**। धर्माधर्मयोरेकैकस्य फलमुक्त्वा मिश्रयोः फलमाह—**साम्ये चेति**। उक्तं हि—"उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः" इति। १०

त्रिविधमपि कर्मफलं वैराग्यार्थं संक्षिप्योपसंहरति—**एवमिति**। सा चाविद्याकृतत्वादनर्थरूपेत्याह—**स्वाभाविकेति**। विचित्रकर्मजन्यतया तस्या वैचित्र्यमाह—**धर्माधर्मेति**। तर्हि धर्माधर्माभ्यामेव तन्निर्माणसंभवात्कृतमविद्ययेत्यत आह—**नामेति**। तेषां सूक्ष्मावस्थाऽविद्या तदालम्बनेति यावत्। धर्मादेरविद्यायाश्च निमित्तत्वोपादानत्वाभ्यामुपयोग इति भावः। ननु संसारगतेराविद्यकत्वमयुक्तं प्रत्यक्षादिप्रतिपन्नत्वा"त्तन्नामरूपाभ्यामेव व्याक्रियते"ति श्रुतौ च नामरूपात्मनो जगतोऽभिव्यक्तिश्रवणान्न च प्रामाणिकस्याविद्याकृतत्वमत आह—**तदेवेदमिति**। जगतः १५ स्वरूपमात्मा तत्राध्यस्तत्वात्तस्मादात्मतत्त्वेऽनभिव्यक्ते प्रत्यक्षादिना श्रुत्या चाभिव्यक्तमिव दृश्यमानमपि जगदनभिव्यक्तमेवेति न तस्याविद्याकृतत्वक्षतिरिति भावः। अविद्याकृतां संसारगतिमनुभाषते—**स एष इति**। नन्वविद्याकृतत्वे कथमनादित्वमित्याशङ्क्य तस्य प्रवाहरूपेणेत्याह—**बीजाङ्कुरादिवदिति**। तर्हि कादाचित्कतया साधनापेक्षामन्तरेण नाशो भविष्यतीत्याशङ्क्याऽऽह—**अनादिरिति**। चैतन्यवदात्मनि तस्याविद्याकृतत्वानुपपत्तिमाशङ्क्य नानारूपत्वेन ततो विलक्षणत्वादेकरूपे युक्तं तस्य कल्पितत्वमित्याह—**क्रियेति**। अनादेरपि संसारस्य प्रागभाव- २० वन्निवृत्तिः स्यादिति चेत्तथाऽपि ब्रह्मविद्यामन्तरेण नाशो नास्तीत्याह—**अनन्त इति**। प्रयत्नतो हेयत्वं द्योतयितुमनर्थ इति विशेषणम्। नैसर्गिक इति पाठे तु कारणरूपेण तत्त्वमुन्नेयम्। यस्मात्कर्म संसारफलं न मोक्षं फलयति तस्मात्सनिदानसंसारनिवर्तकात्मज्ञानार्थत्वेन साधनचतुष्टयसंपन्नमधिकारिणमधिकृत्य वेदान्तारम्भः सम्भवतीत्युपसंहरति—**इत्येतस्मादिति**।

यथोक्तज्ञानार्थत्वेनोपनिषदारम्भे "ब्रह्म वा इदमग्र आसीत्" इत्यारब्धव्यं तस्मादारभ्य ज्ञानोपदेशात्। २५ "उषा वा अश्वस्य" इत्यारम्भस्तु न युक्तः साक्षादत्र तदनुक्तेरित्याशङ्क्यास्मादारभ्योपनिषादारम्भेऽभीष्टं फलमभिधित्समानः प्रथममश्वमेधोपासनफलमाह—**अस्य त्विति**। राजयज्ञत्वादश्वमेधस्य तदनधिकारिणामपि ब्राह्मणादीनां तत्फलार्थिनामस्मादेवोपासनात्तदाप्तिरिति मत्वा श्रुतौ तदुपासनोक्तिरित्यर्थः। किमत्र नियामकमित्याशङ्क्य विकल्पश्रवणं केवलस्यापि ज्ञानस्य साधनत्वं सूचयतीत्यर्थतो विकल्पश्रुतिमुदाहरति—**विद्ययेति**। तत्फलप्राप्तिरिति पूर्वेण सम्बन्धः। तत्रैव श्रुत्यन्तरमाह—**तद्धेति**। तदेतत्प्राणदर्शनं लोकप्राप्तिसाधनं प्रसिद्धमिति यावत्। आदिशब्देन ३० केवलोपास्त्या ब्रह्मलोकाप्तिवादिन्यः श्रुतयो गृह्यन्ते[२]।

अश्वमेधे यदुपासनं तस्याप्यश्वादिवत्तच्छेषत्वेन फलवत्त्वान्न स्वातन्त्र्येण तद्वत्त्वमङ्गेषु स्वतन्त्रफलाभावादिति शङ्कते—**कर्मविषयत्वमिति**। ज्ञानस्य क्रत्वर्थत्वं दूषयति—**नेति**। पूर्वत्रार्थतो दर्शितां विकल्पश्रुतिमत्र हेतुतया स्वरूपतोऽनुक्रामति—**योऽश्वमेधेनेति**। स सर्वं पाप्मानं तरति तरति ब्रह्महत्यामिति सम्बन्धः। ज्ञानकर्मणोस्तुल्य-

१. विद्यया = उपासनेन, कर्मणा = अनुष्ठानेन वेति विकल्प उक्तः। इदमेव "योऽश्वमेधेन यजते य उ चैनमेवं वेद" ३५ इति तैत्तिरीयकसंहितायामुक्तम्।

२. ताश्च उपकोसलविद्याशाण्डिल्यविद्यादयः। तत्र तत्र तेऽर्चिषमभिसम्भवन्त्यर्चिषोहः इत्यादिनोत्तरायणमार्गश्रुतेः। अहङ्ग्रहोपासकानां सर्वेषां ब्रह्मलोकप्राप्तेर्निर्णीतत्वाच्च "कार्यं बादरिरस्य गत्युपपत्तेरि"ति सूत्रेण ( ब्र. सू. ४–३–७ )

**वेव" इति विकल्पश्रुतेः। विद्याप्रकरणे चाऽऽम्नानात्। [1]कर्मान्तरे च सम्पादनदर्शनाद्विज्ञानात्तत्फलप्राप्तिरस्तीत्यवगम्यते। सर्वेषां च कर्मणां परं कर्माश्वमेधः[2]। [3]समष्टिव्यष्टिप्राप्तिफलत्वात्। तस्य चेह ब्रह्मविद्याप्रारम्भ आम्नानं सर्वकर्मणां संसार[illegible]नार्थम्[4]। तथा च दर्शयिष्यति फलमशनायां मृत्युभावम्। न [5]नित्यानां संसारविषयफलत्वमिति चेत्। न। सर्वकर्मफलोपसंहारश्रुतेः। [6]सर्वं हि पत्नीसम्बद्धं कर्म। "जाया मे स्यादेतावान्वै कामः"**
५ **इति निसर्गत एव सर्वकर्मणां काम्यत्वं दर्शयित्वा पुत्रकर्मापरविद्यानां च "अयं लोकः पितृलोको देवलोकः" इति फलं दर्शयित्वा त्र्यन्नात्मकतां चान्त उपसंहरिष्यति "त्रयं वा इदं नाम रूपं कर्म" इति। सर्वकर्मणां फलं व्याकृतं**

फलत्वस्य न्याय्यत्वादिति शेषः। उपास्तिफलश्रुतेरर्थवादत्वमाशङ्क्याश्वमेधवदुपास्तेरपि कर्मत्वाद्विहितत्वात्कर्मप्रकरणाद्व्युत्थितत्वाच्च मैवमित्याह—**विद्येति**। फलश्रुतेरर्थवादत्वाभावे हेत्वन्तरमाह—**कर्मान्तरे चेति**। अश्वमेधातिरिक्ते कर्मण्ययं वाव लोकोऽग्निरित्यादौ चित्याग्न्यादावेतल्लोकादिसम्पादनस्य स्वतन्त्रफलोपासनस्य दर्शनान्न
१० फलश्रुतेरर्थवादतेत्यर्थः। अश्वमेधोपासनं न क्रत्वर्थं किं तु पुरुषार्थं तत्र चाधिकारोऽश्वमेधक्रत्वनधिकारिणामपीत्येतावदेवेष्टं चेदुपासने कर्मप्रकरणस्थेऽपि तल्लाभाद्विद्याप्रकरणे नास्याध्ययनमर्थवदित्याशङ्क्याऽऽह—**सर्वेषां चेति**। परत्वे हेतुः—**समष्टीति**। अनुवृत्तव्यावृत्तरूपहिरण्यगर्भप्राप्तिहेतुत्वात्तस्य श्रेष्ठतेत्यर्थः।

तस्य पुण्यश्रेष्ठत्वेऽपि प्रकृते किमायातं तदाह—**तस्य चेति**। यदा क्रतुप्रधानस्याश्वमेधस्योपास्तिसहितस्यापि संसारफलत्वं तदाऽल्पीयसामग्निहोत्रादीनां संसारफलत्वं किं वाच्यमित्यस्मिन्कर्मराशौ बन्धहेतौ विरक्ताः साधनचतु-
१५ ष्टयविशिष्टा ज्ञानमपेक्षमाणास्तदुपाये श्रवणादावेव सर्वकर्मसंन्यासपूर्वके कथं प्रवर्तेरन्नित्याशयवती श्रुतिरुपासनां विद्यारम्भेऽभिदधाति। तेन "उषा वा अश्वस्ये"त्याद्युपनिषदारम्भो युक्तोऽस्य विशिष्टाधिकारिसमर्पकत्वादित्यर्थः। उपासनफलस्य संसारगोचरत्वमेव कुतः सिद्धमत आह—**तथा चेति**। "अशनाया हि मृत्युः" "स वै नैव रेमे" "सोऽबिभेदि"ति भयारत्यादिश्रवणादुपास्तियुक्तक्रतुफलस्य सूत्रस्य बन्धमध्यपातित्वाद्विशिष्टोऽपि क्रतुर्न मुक्तये पर्याप्नोतीत्यर्थः। उक्ते सर्वकर्मणां बन्धफलत्वे नित्यनैमित्तिकानां न तत्फलत्वं तेषां विध्युद्देशे फलाश्रुतेर्नष्टाश्वदग्धरथन्यायेन
२० मुक्तिफलत्वलाभादिति शङ्कते—**न नित्यानामिति**। "एतावान्वै काम" इति सर्वकर्मणामविशेषेण फलसम्बन्धश्रवणात्पश्वादेश्च काम्यफलत्वस्य तद्विध्युद्देशवशात्सिद्धत्वात्"कर्मणा पितृलोक" इति वाक्यस्य नित्यादिकर्मफलविषयत्वान्न मोक्षफलत्वाशङ्केति परिहरति—**नेति**। उक्तमेव स्फुटयति—**सर्वं हीति**। पत्नीसम्बन्धे मानमाह—**जायेति**। तथाऽपि कथं कर्मणः सर्वस्य कामोपायत्वं तत्राह—**एतावान्वै काम इति**। कथं तर्हि तेषां फलभेदो लभ्यते तत्राऽऽह—**पुत्रेति**। अथैवं फलविभागे कथं समष्टिव्यष्टिप्राप्तिफलत्वमश्वमेधस्योक्तमत आह—**त्र्यन्नात्मकतां चेति**।
२५ अस्याध्यायस्यावसाने कर्मफलस्य हिरण्यगर्भरूपतां त्रयमित्याद्या श्रुतिरुपसंहरिष्यतीत्यर्थः। उपसंहारश्रुतेः तात्पर्यमाह—**सर्वकर्मणामिति**।

---

१. कर्मान्तरे सम्पादनं—प्राप्यलोकस्य कर्मान्तरे सम्पादनं यथा—चयनगताग्नावेतल्लोकसम्पादनमेतल्लोकरूपेण ध्यानम्। एतदेतल्लोकप्राप्तिसाधनम्।

२. परमश्वमेधः तस्यैव "तरति ब्रह्महत्यामि"त्यनेन ब्रह्महत्याख्यमहापातकनिवर्तकत्वश्रवणात्। "ब्रह्महत्या-
३० श्वमेधाभ्यां न परं पुण्यपापयोरि"त्युक्तेश्च।

३. सर्वलिङ्गशरीरेष्वनुग्राहकत्वेन समष्टिः। स्वयमपि पृथक्लिङ्गशरीराभिमानितया व्यष्टिः।

४. प्रदर्शनार्थं कैमुतिकन्यायेनेति शेषः।

५. नित्यानामग्निहोत्रादीनां फलं नोक्तं, मुक्तिसाधनञ्च कर्म नोक्तम्। अत उभयाकाङ्क्षया नित्यकर्मणां मुक्तिफलत्वमस्त्वित्यर्थः।

३५ ६. नित्यानामपि पत्नीसम्बद्धत्वादग्निहोत्रादीनाम् एतावान् = सर्वं पत्नीसम्बद्धं कर्मेत्यर्थः। कामः काम्य एवेत्यर्थः। नित्यादीनामपि स्वर्गादिफलमस्ति। "तद्यथा आम्रे फलार्थो निर्मिते छायागन्धावनूत्पद्येते। एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते" इति आपस्तम्बस्मृतेः। अतो न तस्य मुक्तिः फलम्। **त्रयं वा इदमिति** अध्यायान्ते "नामरूपकर्मात्मकः प्रपञ्च" इत्युक्त्वा स "प्राणेन" हिरण्यगर्भेण छन्नः इत्युक्तेः सर्वं हिरण्यगर्भात्मकमित्यर्थः।

७. अशनाया—अशितुमिच्छा अश्वमेधफलभूतस्य हिरण्यगर्भस्य
४० जाता, ततस्तन्निवृत्तये प्राणिनो भक्षणे प्रवृत्तः स एव मृत्युः।

**संसार एवेति । इदमेव त्रयं प्रागुत्पत्तेस्तर्ह्यव्याकृतमासीत् । तदेव पुनः सर्वप्राणिकर्मवशाद्व्याक्रियते बीजादिव वृक्षः । सोऽयं व्याकृताव्याकृतरूपः संसारोऽविद्याविषयः क्रियाकारकफलात्मकतयाऽऽत्मरूपत्वेनाध्यारोपितोऽविद्ययैव मूर्तामूर्ततद्वासनात्मकः । अतो विलक्षणोऽनामरूपकर्मात्मकोऽद्वयो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि क्रियाकारकफलभेदादिविपर्ययेणावभासते । अतोऽस्मात्क्रियाकारकफलभेदस्वरूपादेतावदिदमिति साध्यसाधनरू[illegible] कामादिदोषकर्मबीजभूताविद्यानिवृत्तये रज्ज्वामिव सर्पविज्ञानापनयनाय ब्रह्मविद्याऽऽरभ्यते ।** ५

कर्मफलं संसारश्चेत्प्राक्तदनुष्ठानात्तदभावान्मुक्तानां पुनर्बन्धः स्यादित्याशङ्क्याऽऽह—**इदमेवेति** । तर्हि तस्यामवस्थायामिति यावत् । तस्य पुनर्व्याकरणे कारणमाह—**तदेवेति** । व्याकृताव्याकृतात्मनः संसारस्य प्रामाणिकत्वेन सत्यत्वमाशङ्क्याविद्याकृतत्वेन तन्मिथ्यात्वमुक्तं स्मारयति—**सोऽयमिति** । स एष हि भ्रान्तिविषयो न प्रामाणिकस्तत्कुतोऽस्य सत्यतेत्यर्थः । कथमस्याऽऽत्मन्यद्वये कूटस्थे प्राप्तिरित्याशङ्क्याऽऽह—**क्रियेति** । समारोपे मूलकारणमाह—**अविद्ययेति** । आत्मन्यविद्यारोपितं द्वैतमित्यत्र "द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च" इत्यादिवाक्यं १० प्रमाणयति—**मूर्तेति** । नन्वात्मन्यारोपो नोपपद्यते तस्य नित्यशुद्धबुद्धमुक्तस्वभावस्य द्वैतविलक्षणत्वादसति सादृश्येऽध्यासासिद्धेरत आह—**अत इति** । संसाराद्वैलक्षण्यमेव प्रकटयति—**अनामेति** । आदिपदेनान्येऽपि विपर्ययभेदाः संगृह्यन्ते । आरोपे प्रमिणोमि करोमि भुञ्जे चेत्यनुभवं प्रमाणयति—**अवभासत इति** । आत्मन्यध्यासः सादृश्याद्यभावेऽपि नभसि मलिनत्वादिवद्यतोऽनुभूयतेऽतः सविलासाविद्यानिवर्तकब्रह्मविद्यार्थत्वेनोपनिषदारम्भः सम्भवतीत्युपसंहरति—**अत इति** । एतावदित्यनर्थात्मत्वोक्तिः । तत्त्वज्ञानादज्ञाननिवृत्तौ दृष्टान्तमाह—**रज्ज्वामिवेति** । १५

इति सम्बन्धभाष्यम्

ॐ

श्रीमत्सु[illegible]विरचितं

# बृहदारण्यकोपनिषद्भाष्यवार्तिकम्

श्रीमदानन्दगिर्याचार्यविरचित-

## शास्त्रप्रकाशिकाटोका-

समुल्लसितम्

## प्रथमाध्याये प्रथमं ब्राह्मणम्

### सम्बन्धभाष्यवार्तिकम्

**स्वाविद्याविभवप्रसूतविपुलद्वैतप्रपञ्चाहितस्पष्टभ्रान्तितिरोहितात्ममतयो यं भागशो मन्वते ।**
**निर्भागं सकलाभिधानमननव्यापारदूरस्थितं वन्दे नन्दितविश्वमव्ययमजं भक्त्या तमेकं विभुम् ॥१॥**

#### शास्त्रप्रकाशिका

[1]स्वाज्ञानोद्भूतभूतप्रमुखबहुमुखद्वैतदेहद्वयोद्यन्मातृत्वादिप्रपञ्चप्रचयपरिचयप्राप्तसंसारयन्त्रम् ।
नेत्यभ्यासप्रसूतप्रबलमतिबलप्रास्तमोहप्रभावप्रोत्थप्रत्यर्थिसार्थद्युतिकथमकथं धाम कामं प्रपद्ये ॥ १ ॥
[2]कारुण्यामृतवारिपूरलहरीदूरीकृतस्वाश्रितस्वान्तध्वान्तनिरन्तरान्तररजोराशिर्यशः शेवधिः ।
भास्वद्भानुसहस्रभानुगहनोऽवज्ञाततिग्मद्युतिर्देवः श्रीपुरुषोत्तमो विजयते नीलाद्रिचूडामणिः ॥ २ ॥ १५
[3]त्वङ्गत्तुङ्गभुजङ्गसङ्गगहनप्रत्युद्यदङ्गद्युतिभ्रश्यद्विश्वदिगन्तरालबहुलप्रौढान्धकाराङ्कुरः ।
सोमः सोमकलाकलापकलितो लावण्यकारुण्यभूर्भूयान्नो निरवद्यबोधविधये देवो भवानीपतिः ॥ ३ ॥
बन्धूकबन्धुरुचये रचये नमस्यां हेरम्बनाम वहते महते गजाय ।
प्रत्यूहभङ्गविधये निधये गुणानां शोभामतीव भजते सृजते जगन्ति ॥ ४ ॥
मातर्नतोऽस्मि भवतीमथ चाऽर्थये त्वां[4] चेतः सरस्वति ! सुरेश्वरवार्तिके मे । २०
वाचा सहैव सदनुग्रहसम्प्रसन्नमेकाग्रमस्तु परिहाय पराञ्चमर्थम् ॥ ५ ॥

---

१. स्वाश्रिताज्ञानजन्यपञ्चभूतप्रमुखं द्वैतं तद्गतं देहद्वयं सूक्ष्मस्थूलरूपं तेन निमित्तेन प्राप्तः प्रमातृत्वादिप्रपञ्च-प्रचयपरिचयः तेन संसारयन्त्रं प्राप्तः जीवरूपं प्राप्तः आत्मा स एव धाम। तच्च "नेति नेति" इत्यभ्यासश्रुतिबलात् प्राप्ता या मतिः साक्षात्कारः तद्बलेन प्रास्ता निरस्ता मोहप्रभावेणोत्पन्ना या वैरिसमूहस्यानात्मनः प्रकाशस्य कथा येन तत्। अकथं वाङ्मनसागोचरं प्रपद्ये शरणं गतोऽस्मि। अत्र प्रपत्तिः अभेदध्यानमेव निर्गुणे २५ नमस्कार्यत्वाद्यसम्भवात् ।

२. अयं श्लोकः जगन्नाथक्षेत्रस्थश्रीविष्णुपरः पुरुषोत्तमः कारुण्याख्यामृतवारिपूरलहर्या येन स्वाश्रितानामज्ञानं आन्तरः रजोगुणश्च दूरीकृतौ, यश्च प्रकाशमानसूर्यसहस्रकिरणैः गहनः अप्रकाश्यः। अत एव येन सूर्योऽप्यवज्ञातः न्यक्कृतः सः विजयते ।

३. श्रीभवानीपतिः शिवः स्तूयते—यः स्वशरीरे विहरतां सर्पाणां प्रकाशेन बहुलीभवदङ्गद्युत्या प्रपञ्चगतान्धकारं ३० निवर्तयति, यश्च चन्द्रकलाभूषणः लावण्यस्य कारुण्यं प्रकाशयति अतिलावण्ययुक्तमस्य लीलाशरीरमित्यथः। "ईश्वरात् ज्ञानमिच्छेत्" इति स्मृतिमनुसृत्य शिवं ज्ञानं प्रार्थयते। वार्तिकद्वितीयश्लोके सतां मुमुक्षूणां शान्तये मोक्षार्थमित्यर्थः। यद्यपि तत्र सतां इति साधनचतुष्टयसम्पन्नानामित्यर्थो युक्तः तथापि तत्र पूर्वपूर्वस्यो-त्तरोत्तरकारणत्वात् मुमुक्षुत्वमेवाधिकार इति न्यायकल्पलतिका। युक्तं चैतत् अत एव सूत्रमुक्तावलौ पूर्वेषां कुलालपितृवत् अन्यथासिद्धिरुक्ता। ३५

४. "अथ वार्थये त्वामि"ति पाठः ।

